# ॥ श्रीगङ्गासहस्रनामस्तोत्रम् ॥
अकारादिक्षकारान्त नामघटितं स्कन्दपुराणान्तर्गतं

अगस्त्य उवाच
विना स्नानेन गङ्गायां नृणां जन्म निरर्थकम् ।
उपायान्तरमस्त्यन्यद् येन स्नानफलं लभेत् ॥ १॥

अशक्तानां च पङ्गूनामालस्योपहतात्मनाम् ।
दूरदेशान्तरस्थानां गङ्गास्नानं कथं भवेत् ॥ २॥

दानं वाथ व्रतं वाथ मन्त्रः स्तोत्रं जपोऽथवा ।
तीर्थान्तराभिषेको वा देवतोपासनं तु वा ॥ ३॥

यद्यस्ति किञ्चित् षड्वक्त्र गङ्गास्नानफलप्रदम् ।
विधानान्तरमात्रेण तद् वद प्रणताय मे ॥ ४॥

त्वत्तो न वेद स्कन्दान्यो गङ्गागर्भसमुद्भव ।
परं स्वर्गतरङ्गिण्यां महिमानं महामते ॥ ५॥

स्कन्द उवाच
सन्ति पुण्यजलानीह सरांसि सरितो मुने ।
स्थाने स्थाने च तीर्थानि जितात्माध्युषितानि च ॥ ६॥

दृष्टप्रत्ययकारीणि महामहिमभाञ्ज्यपि ।
परं स्वर्गतरङ्गिण्याः कोट्यंशोऽपि न तत्र वै ॥ ७॥

अनेनैवानुमानेन बुद्ध्यस्व कलशोद्भव ।
दध्रे गङ्गोत्तमाङ्गेन देवदेवेन शम्भुना ॥ ८॥

स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनैः ।
विना विष्णुपदीं क्वान्यत् समर्थमघमोचने ॥ ९॥

गङ्गास्नानफलं ब्रह्मन् गङ्गायामेव लभ्यते ।
यथा द्राक्षाफलस्वादो द्राक्षायामेव नान्यतः ॥ १०॥

अस्त्युपाय इह त्वेकः स्याद् येनाविकलं फलम् ।
स्नानस्य देवसरितो महागुह्यतमो मुने ॥ ११॥

शिवभक्ताय शान्ताय विष्णुभक्तिपराय च ।
श्रद्धालवे त्वास्तिकाय गर्भवासमुमुक्षवे ॥ १२॥

कथनीयं न चान्यस्य कस्यचित् केनचित् क्वचित् ।
इदं रहस्यं परमं महापातकनाशनम् ॥ १३॥

महाश्रेयस्करं पुण्यं मनोरथकरं परम् ।
द्युनदीप्रीतिजनकं शिवसन्तोषसन्ततिः ॥ १४॥

नाम्नां सहस्रं गङ्गायाः स्तवराजेषु शोभनम् ।
जप्यानां परमं जप्यं वेदोपनिषदां समम् ॥ १५॥

जपनीयं प्रयत्नेन मौनिना वाचकं विना ।
शुचिस्थानेषु शुचिना सुस्पष्टाक्षरमेव च ॥ १६॥

ध्यानम् -
शैलेन्द्रादवतारिणी निजजले मज्जद्जनोत्तारिणी
पारावारविहारिणी भवभयश्रेणी समुत्सारिणी ।
शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी ॥

ॐ नमो गङ्गादेव्यै ॥

ओंकाररूपिण्यजराऽतुलाऽनन्ताऽमृतस्रवा ।
अत्युदाराऽभयाऽशोकाऽलकनन्दाऽमृताऽमला ॥ १७॥

अनाथवत्सलाऽमोघाऽपांयोनिरमृतप्रदा ।
अव्यक्तलक्षणाऽक्षोभ्याऽनवच्छिन्नाऽपराऽजिता ॥ १८॥

अनाथनाथाऽभीष्टार्थसिद्धिदाऽनङ्गवर्धिनी ।
अणिमादिगुणाऽधाराऽग्रगण्याऽलीकहारिणी ॥ १९॥

अचिन्त्यशक्तिरनघाऽद्भुतरूपाऽघहारिणी ।
अद्रिराजसुताऽष्टाङ्गयोगसिद्धिप्रदाऽच्युता ॥ २०॥

अक्षुण्णशक्तिरसुदाऽनन्ततीर्थाऽमृतोदका ।
अनन्तमहिमाऽपाराऽनन्तसौख्यप्रदाऽन्नदा ॥ २१॥

अशेषदेवतामूर्तिरघोराऽमृतरूपिणी ।
अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा ॥ २२॥

अशेषविघ्नसंहर्त्री त्वशेषगुणगुम्फिता ।
अज्ञानतिमिरज्योतिरनुग्रहपरायणा ॥ २३॥

अभिरामाऽनवद्याङ्ग्यनन्तसाराऽकलङ्किनी ।
आरोग्यदाऽऽनन्दवल्ली त्वापन्नार्तिविनाशिनी ॥ २४॥

आश्चर्यमूर्तिरायुष्या ह्याढ्याऽऽद्याऽऽप्राऽऽर्यसेविता ।
आप्यायिन्याप्तविद्याख्या त्वानन्दाऽऽश्वासदायिनी ॥ २५॥

आलस्यघ्न्यापदां हन्त्री ह्यानन्दामृतवर्षिणी ।
इरावतीष्टदात्रीष्टा त्विष्टापूर्तफलप्रदा ॥ २६॥

इतिहासश्रुतीड्यार्था त्विहामुत्रशुभप्रदा ।
इज्याशीलसमिज्येष्ठा त्विन्द्रादिपरिवन्दिता ॥ २७॥

इलालङ्कारमालेद्धा त्विन्दिरारम्यमन्दिरा ।
इदिन्दिरादिसंसेव्या त्वीश्वरीश्वरवल्लभा ॥ २८॥

ईतिभीतिहरेड्या च त्वीडनीयचरित्रभृत् ।
उत्कृष्टशक्तिरुत्कृष्टोडुपमण्डलचारिणी ॥ २९॥

उदिताम्बरमार्गोस्रोरगलोकविहारिणी ।
उक्षोर्वरोत्पलोत्कुम्भा उपेन्द्रचरणद्रवा ॥ ३०॥

उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्धिनी ।
उद्वेगघ्न्युष्णशमनी ह्युष्णरश्मिसुताप्रिया ॥ ३१॥

उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी ।
ऊर्जं वहन्त्यूर्जधरोर्जावती चोर्मिमालिनी ॥ ३२॥

ऊर्ध्वरेतःप्रियोर्ध्वाध्वा ह्यूर्मिलोर्ध्वगतिप्रदा ।
ऋषिवृन्दस्तुतर्द्धिश्च ऋणत्रयविनाशिनी ॥ ३३॥

ऋतम्भरर्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया ।
ऋक्षमार्गवहर्क्षार्चिरृजुमार्गप्रदर्शिनी ॥ ३४॥

एधिताखिलधर्मार्था त्वेकैकामृतदायिनी ।
एधनीयस्वभावैज्या त्वेजिताशेषपातका ॥ ३५॥

ऐश्वर्यदैश्वर्यरूपा ह्यैतिह्यं ह्यैन्दवीद्युतिः ।
ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी ॥ ३६॥

ओष्ठामृतौन्नत्यदात्री त्वौषधं भवरोगिणाम् ।
औदार्यचञ्चुरौपेन्द्री त्वौग्री ह्यौमेयरूपिणी ॥ ३७॥

अम्बराध्ववहाम्बष्ठाम्बरमालाम्बुजेक्षणा ।
अम्बिकाम्बुमहायोनिरन्धोदान्धकहारिणी ॥ ३८॥

अंशुमाला ह्यंशुमती त्वङ्गीकृतषडानना ।
अन्धतामिस्रहन्त्र्यन्धुरञ्जना ह्यञ्जनावती ॥ ३९॥

कल्याणकारिणी काम्या कमलोत्पलगन्धिनी ।
कुमुद्वती कमलिनी कान्तिः कल्पितदायिनी ॥ ४०॥

काञ्चनाक्षी कामधेनुः कीर्तिकृत् क्लेशनाशिनी ।
क्रतुश्रेष्ठा क्रतुफला कर्मबन्धविभेदिनी ॥ ४१॥

कमलाक्षी क्लमहरा कृशानुतपनद्युतिः ।
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी ॥ ४२॥

कामरूपा क्रियाशक्तिः कमलोत्पलमालिनी ।
कूटस्था करुणा कान्ता कूर्मयाना कलावती ॥ ४३॥

कमला कल्पलतिका काली कलुषवैरिणी ।
कमनीयजला कम्रा कपर्दिसुकपर्दगा ॥ ४४॥

कालकूटप्रशमनी कदम्बकुसुमप्रिया ।
कालिन्दी केलिललिता कलकल्लोलमालिका ॥ ४५॥

क्रान्तलोकत्रया कण्डूः कण्डूतनयवत्सला ।
खड्गिनी खड्गधाराभा खगा खण्डेन्दुधारिणी ॥ ४६॥

खेखेलगामिनी खस्था खण्डेन्दुतिलकप्रिया ।

खेचरी खेचरीवन्द्या ख्यातिः ख्यातिप्रदायिनी ॥ ४७॥

खण्डितप्रणताघौघा खलबुद्धिविनाशिनी ।
खातैनः कन्दसन्दोहा खड्गखट्वाङ्ग खेटिनी ॥ ४८॥

खरसन्तापशमनी खनिः पीयूषपाथसाम् ।
गङ्गा गन्धवती गौरी गन्धर्वनगरप्रिया ॥ ४९॥

गम्भीराङ्गी गुणमयी गतातङ्का गतिप्रिया ।
गणनाथाम्बिका गीता गद्यपद्यपरिष्टुता ॥ ५०॥

गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा ।
गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी ॥ ५१॥

गोत्रप्रवर्धिनी गुण्या गुणातीता गुणाग्रणीः ।
गुहाम्बिका गिरिसुता गोविन्दाङ्घ्रिसमुद्भवा ॥ ५२॥

गुणनीयचरित्रा च गायत्री गिरिशप्रिया ।
गूढरूपा गुणवती गुर्वी गौरववर्धिनी ॥ ५३॥

ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला ।
घर्महन्त्री घृतवती घृततुष्टिप्रदायिनी ॥ ५४॥

घण्टारवप्रिया घोराघौघविध्वंसकारिणी ।
घ्राणतुष्टिकरी घोषा घनानन्दा घनप्रिया ॥ ५५॥

घातुका घूर्णितजला घृष्टपातकसन्ततिः ।
घटकोटिप्रपीतापा घटिताशेषमङ्गला ॥ ५६॥

घृणावती घृणिनिधिर्घस्मरा घूकनादिनी ।
घुसृणापिञ्जरतनुर्घर्घरा घर्घरस्वना ॥ ५७॥

चन्द्रिका चन्द्रकान्ताम्बुश्चञ्चदापा चलद्युतिः ।
चिन्मयी चितिरूपा च चन्द्रायुतशतानना ॥ ५८॥

चाम्पेयलोचना चारुश्चार्वङ्गी चारुगामिनी ।
चार्या चारित्रनिलया चित्रकृच्चित्ररूपिणी ॥ ५९॥

चम्पूश्चन्दनशुच्यम्बुश्चर्चनीया चिरस्थिरा ।
चारुचम्पकमालाढ्या चमिताशेषदुष्कृता ॥ ६०॥

चिदाकाशवहा चिन्त्या चञ्चच्चामरवीजिता ।
चोरिताशेषवृजिना चरिताशेषमण्डला ॥ ६१॥

छेदिताखिलपापौघा छद्मघ्नी छलहारिणी ।
छन्नत्रिविष्टपतला छोटिताशेषबन्धना ॥ ६२॥

छुरितामृतधारौघा छिन्नैनाश्छन्दगामिनी ।
छत्रीकृतमरालौघा छटीकृतनिजामृता ॥ ६३॥

जाह्नवी ज्या जगन्माता जप्या जङ्घालवीचिका ।
जया जनार्दनप्रीता जुषणीया जगद्धिता ॥ ६४॥

जीवनं जीवनप्राणा जगज्ज्येष्ठा जगन्मयी ।
जीवजीवातुलतिका जन्मिजन्मनिबर्हिणी ॥ ६५॥

जाड्यविध्वंसनकरी जगद्योनिर्जलाविला ।
जगदानन्दजननी जलजा जलजेक्षणा ॥ ६६॥

जनलोचनपीयूषा जटातटविहारिणी ।
जयन्ती जञ्जपूकघ्नी जनितज्ञानविग्रहा ॥ ६७॥

झल्लरीवाद्यकुशला झलज्झालजलावृता ।
झिण्टीशवन्द्या झङ्कारकारिणी झर्झरावती ॥ ६८॥

टीकिताशेषपाताला टङ्किकैनोऽद्रिपाटने ।
टङ्कारनृत्यत्कल्लोला टीकनीयमहातटा ॥ ६९॥

डम्बरप्रवहा डीनराजहंसकुलाकुला ।
डमड्डमरुहस्ता च डामरोक्तमहाण्डका ॥ ७०॥

ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला ।
ढुण्ढिविघ्नेशजननी ढणड्ढुणितपातका ॥ ७१॥

तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी ।
त्रिलोकगोप्त्री तोयेशी त्रैलोक्यपरिवन्दिता ॥ ७२॥

तापत्रितयसंहर्त्री तेजोबलविवर्धिनी ।
त्रिलक्ष्या तारणी तारा तारापतिकरार्चिता ॥ ७३॥

त्रैलोक्यपावनी पुण्या तुष्टिदा तुष्टिरूपिणी ।
तृष्णाच्छेत्री तीर्थमाता त्रिविक्रमपदोद्भवा ॥ ७४॥

तपोमयी तपोरूपा तपःस्तोमफलप्रदा । var पदप्रदा
त्रैलोक्यव्यापिनी तृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ॥ ७५॥

त्रैलोक्यसुन्दरी तुर्या तुर्यातीतफलप्रदा ।
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिका ॥ ७६॥

तेजोगर्भा तपस्सारा त्रिपुरारिशिरोगृहा ।
त्रयीस्वरूपिणी तन्वी तपनाङ्गजभीतिनुत् ॥ ७७॥

तरिस्तरणिजामित्रं तर्पिताशेषपूर्वजा ।
तुलाविरहिता तीव्रपापतूलतनूनपात् ॥ ७८॥

दारिद्र्यदमनी दक्षा दुष्प्रेक्षा दिव्यमण्डना ।
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ॥ ७९॥

दर्शितानेककुतुका दुष्टदुर्जयदुःखहृत् ।
दैन्यहृद्दुरितघ्नी च दानवारिपदाब्जजा ॥ ८०॥

दन्दशूकविषघ्नी च दारिताघौघसन्ततिः ।
द्रुता देवद्रुमच्छन्ना दुर्वाराघविघातिनी ॥ ८१॥

दमग्राह्या देवमाता देवलोकप्रदर्शिनी ।
देवदेवप्रिया देवी दिक्पालपददायिनी ॥ ८२॥

दीर्घायुः कारिणी दीर्घा दोग्ध्री दूषणवर्जिता ।
दुग्धाम्बुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ॥ ८३॥

द्युनदी दीनशरणं देहिदेहनिवारिणी ।
द्राघीयसी दाघहन्त्री दितपातकसन्ततिः ॥ ८४॥

दूरदेशान्तरचरी दुर्गमा देववल्लभा ।

दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ॥ ८५॥

दुरासदा दानशीला द्राविणी द्रुहिणस्तुता ।
दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी ॥ ८६॥

दानसारा दयासारा द्यावाभूमिविगाहिनी ।
दृष्टादृष्टफलप्राप्तिर्देवतावृन्दवन्दिता ॥ ८७॥

दीर्घव्रता दीर्घदृष्टिर्दीप्ततोया दुरालभा ।
दण्डयित्री दण्डनीतिर्दुष्टदण्डधरार्चिता ॥ ८८॥

दुरोदरघ्नी दावार्चिर्द्रवद्द्रव्यैकशेवधिः ।
दीनसन्तापशमनी दात्री दवथुवैरिणी ॥ ८९॥

दरीविदारणपरा दान्ता दान्तजनप्रिया ।
दारिताद्रितटा दुर्गा दुर्गारण्यप्रचारिणी ॥ ९०॥

धर्मद्रवा धर्मधुरा धेनुर्धीरा धृतिर्ध्रुवा ।
धेनुदानफलस्पर्शा धर्मकामार्थमोक्षदा ॥ ९१॥

धर्मोर्मिवाहिनी धुर्या धात्री धात्रीविभूषणम् ।
धर्मिणी धर्मशीला च धन्विकोटिकृतावना ॥ ९२॥

ध्यातृपापहरा ध्येया धावनी धूतकल्मषा ।
धर्मधारा धर्मसारा धनदा धनवर्धिनी ॥ ९३॥

धर्माधर्मगुणच्छेत्री धत्तूरकुसुमप्रिया ।
धर्मेशी धर्मशास्त्रज्ञा धनधान्यसमृद्धिकृत् ॥ ९४॥

धर्मलभ्या धर्मजला धर्मप्रसवधर्मिणी ।
ध्यानगम्यस्वरूपा च धरणी धातृपूजिता ॥ ९५॥

धूर्धूर्जटिजटासंस्था धन्या धीर्धारणावती ।
नन्दा निर्वाणजननी नन्दिनी नुन्नपातका ॥ ९६॥

निषिद्धविघ्ननिचया निजानन्दप्रकाशिनी ।
नभोऽङ्गणचरी नूतिर्नम्या नारायणी नुता ॥ ९७॥

निर्मला निर्मलाख्याना नाशिनी तापसम्पदाम् ।
नियता नित्यसुखदा नानाश्चर्यमहानिधिः ॥ ९८॥

नदी नदसरोमाता नायिका नाकदीर्घिका ।
नष्टोद्धरणधीरा च नन्दना नन्ददायिनी ॥ ९९॥

निर्णिक्ताशेषभुवना निःसङ्गा निरुपद्रवा ।
निरालम्बा निष्प्रपञ्चा निर्णाशितमहामला ॥ १००॥

निर्मलज्ञानजननी निःशेषप्राणितापहृत् ।
नित्योत्सवा नित्यतृप्ता नमस्कार्या निरञ्जना ॥ १०१॥

निष्ठावती निरातङ्का निर्लेपा निश्चलात्मिका ।
निरवद्या निरीहा च नीललोहितमूर्धगा ॥ १०२॥

नन्दिभृङ्गिगणस्तुत्या नागा नन्दा नगात्मजा ।
निष्प्रत्यूहा नाकनदी निरयार्णवदीर्घनौः ॥ १०३॥

पुण्यप्रदा पुण्यगर्भा पुण्या पुण्यतरङ्गिणी ।
पृथुः पृथुफला पूर्णा प्रणतार्तिप्रभञ्जनी ॥ १०४॥

प्राणदा प्राणिजननी प्राणेशी प्राणरूपिणी ।
पद्मालया पराशक्तिः पुरजित्परमप्रिया ॥ १०५॥

परा परफलप्राप्तिः पावनी च पयस्विनी ।
परानन्दा प्रकृष्टार्था प्रतिष्ठा पालिनी परा ॥ १०६॥ var पालनी

पुराणपठिता प्रीता प्रणवाक्षररूपिणी ।
पार्वती प्रेमसम्पन्ना पशुपाशविमोचनी ॥ १०७॥

परमात्मस्वरूपा च परब्रह्मप्रकाशिनी ।
परमानन्दनिष्यन्दा प्रायश्चित्तस्वरूपिणी ॥ १०८॥ var निष्पन्दा

पानीयरूपनिर्वाणा परित्राणपरायणा ।
पापेन्धनदवज्वाला पापारिः पापनामनुत् ॥ १०९॥

परमैश्वर्यजननी प्रज्ञा प्राज्ञा परापरा ।
प्रत्यक्षलक्ष्मीः पद्माक्षी परव्योमामृतस्रवा ॥ ११०॥

प्रसन्नरूपा प्रणिधिः पूता प्रत्यक्षदेवता ।
पिनाकिपरमप्रीता परमेष्ठिकमण्डलुः ॥ १११॥

पद्मनाभपदार्घ्येण प्रसूता पद्ममालिनी ।
परर्द्धिदा पुष्टिकरी पथ्या पूर्तिः प्रभावती ॥ ११२॥

पुनाना पीतगर्भघ्नी पापपर्वतनाशिनी ।
फलिनी फलहस्ता च फुल्लाम्बुजविलोचना ॥ ११३॥

फालितैनोमहाक्षेत्रा फणिलोकविभूषणम् ।
फेनच्छलप्रणुन्नैनाः फुल्लकैरवगन्धिनी ॥ ११४॥

फेनिलाच्छाम्बुधाराभा फडुच्चाटितपातका ।
फाणितस्वादुसलिला फाण्टपथ्यजलाविला ॥ ११५॥

विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया ।
ब्रह्मण्या ब्रह्मकृद् ब्राह्मी ब्रह्मिष्ठा विमलोदका ॥ ११६॥

विभावरी च विरजा विक्रान्तानेकविष्टपा ।
विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया ॥ ११७॥

विरूपाक्षप्रियकरी विभूतिर्विश्वतोमुखी ।
विपाशा वैबुधी वेद्या वेदाक्षररसस्रवा ॥ ११८॥

विद्या वेगवती वन्द्या बृंहणी ब्रह्मवादिनी ।
वरदा विप्रकृष्टा च वरिष्ठा च विशोधनी ॥ ११९॥

विद्याधरी विशोका च वयोवृन्दनिषेविता ।
बहूदका बलवती व्योमस्था विबुधप्रिया ॥ १२०॥

वाणी वेदवती वित्ता ब्रह्मविद्यातरङ्गिणी ।
ब्रह्माण्डकोटिव्याप्ताम्बुर्ब्रह्महत्यापहारिणी ॥ १२१॥

ब्रह्मेशविष्णुरूपा च बुद्धिर्विभववर्धिनी ।
विलासिसुखदा वश्या व्यापिनी च वृषारणिः ॥ १२२॥

वृषाङ्कमौलिनिलया विपन्नार्तिप्रभञ्जनी ।

विनीता विनता ब्रध्नतनया विनयान्विता ॥ १२३॥

विपञ्ची वाद्यकुशला वेणुश्रुतिविचक्षणा ।
वर्चस्करी बलकरी बलोन्मूलितकल्मषा ॥ १२४॥

विपाप्मा विगतातङ्का विकल्पपरिवर्जिता ।
वृष्टिकर्त्री वृष्टिजला विधिर्विच्छिन्नबन्धना ॥ १२५॥

व्रतरूपा वित्तरूपा बहुविघ्नविनाशकृत् ।
वसुधारा वसुमती विचित्राङ्गी विभावसुः ॥ १२६॥

विजया विश्वबीजं च वामदेवी वरप्रदा ।
वृषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी ॥ १२७॥

भव्या भोगवती भद्रा भवानी भूतभाविनी ।
भूतधात्री भयहरा भक्तदारिद्र्यघातिनी ॥ १२८॥

भुक्तिमुक्तिप्रदा भेशी भक्तस्वर्गापवर्गदा ।
भागीरथी भानुमती भाग्यं भोगवती भृतिः ॥ १२९॥

भवप्रिया भवद्वेष्ट्री भूतिदा भूतिभूषणा ।
भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ॥ १३०॥

भ्रान्तिज्ञानप्रशमनी भिन्नब्रह्माण्डमण्डपा ।
भूरिदा भक्तसुलभा भाग्यवद्दृष्टिगोचरी ॥ १३१॥

भञ्जितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा ।
भिक्षणीया भिक्षुमाता भावा भावस्वरूपिणी ॥ १३२॥

मन्दाकिनी महानन्दा माता मुक्तितरङ्गिणी ।
महोदया मधुमती महापुण्या मुदाकरी ॥ १३३॥

मुनिस्तुता मोहहन्त्री महातीर्था मधुस्रवा ।
माधवी मानिनी मान्या मनोरथपथातिगा ॥ १३४॥

मोक्षदा मतिदा मुख्या महाभाग्यजनाश्रिता ।
महावेगवती मेध्या महा महिमभूषणा ॥ १३५॥

महाप्रभावा महती मीनचञ्चललोचना ।
महाकारुण्यसम्पूर्णा महर्द्धिश्च महोत्पला ॥ १३६॥

मूर्तिमन्मुक्तिरमणी मणिमाणिक्यभूषणा ।
मुक्ताकलापनेपथ्या मनोनयननन्दिनी ॥ १३७॥

महापातकराशिघ्नी महादेवार्धहारिणी ।
महोर्मिमालिनी मुक्ता महादेवी मनोन्मनी ॥ १३८॥

महापुण्योदयप्राप्या मायातिमिरचन्द्रिका ।
महाविद्या महामाया महामेधा महौषधम् ॥ १३९॥

मालाधरी महोपाया महोरगविभूषणा ।
महामोहप्रशमनी महामङ्गलमङ्गलम् ॥ १४०॥

मार्तण्डमण्डलचरी महालक्ष्मीर्मदोज्झिता ।
यशस्विनी यशोदा च योग्या युक्तात्मसेविता ॥ १४१॥

योगसिद्धिप्रदा याज्या यज्ञेशपरिपूरिता ।
यज्ञेशी यज्ञफलदा यजनीया यशस्करी ॥ १४२॥

यमिसेव्या योगयोनिर्योगिनी युक्तबुद्धिदा ।
योगज्ञानप्रदा युक्ता यमाद्यष्टाङ्गयोगयुक् ॥ १४३॥

यन्त्रिताघौघसञ्चारा यमलोकनिवारिणी ।
यातायातप्रशमनी यातनानामकृन्तनी ॥ १४४॥

यामिनीशहिमाच्छोदा युगधर्मविवर्जिता ।
रेवती रतिकृद् रम्या रत्नगर्भा रमा रतिः ॥ १४५॥

रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी ।
रत्नप्रासादगर्भा च रमणीयतरङ्गिणी ॥ १४६॥

रत्नार्ची रुद्ररमणी रागद्वेषविनाशिनी ।
रमा रामा रम्यरूपा रोगिजीवानुरूपिणी ॥ १४७॥

रुचिकृद् रोचनी रम्या रुचिरा रोगहारिणी ।
राजहंसा रत्नवती राजत्कल्लोलराजिका ॥ १४८॥

रामणीयकरेखा च रुजारी रोगरोषिणी । var रोगशोषिणी
राका रङ्कार्तिशमनी रम्या रोलम्बराविणी ॥ १४९॥

रागिणी रञ्जितशिवा रूपलावण्यशेवधिः ।
लोकप्रसूर्लोकवन्द्या लोलत्कल्लोलमालिनी ॥ १५०॥

लीलावती लोकभूमिर्लोकलोचनचन्द्रिका ।
लेखस्रवन्ती लटभा लघुवेगा लघुत्वहृत् ॥ १५१॥

लास्यत्तरङ्गहस्ता च ललिता लयभङ्गिगा ।
लोकबन्धुर्लोकधात्री लोकोत्तरगुणोर्जिता ॥ १५२॥

लोकत्रयहिता लोका लक्ष्मीर्लक्षणलक्षिता ।
लीला लक्षितनिर्वाणा लावण्यामृतवर्षिणी ॥ १५३॥

वैश्वानरी वासवेड्या वन्ध्यत्वपरिहारिणी ।
वासुदेवाङ्घ्रिरेणुघ्नी वज्रिवज्रनिवारिणी ॥ १५४॥

शुभावती शुभफला शान्तिः शन्तनुवल्लभा । var शान्तनु
शूलिनी शैशववयाः शीतलामृतवाहिनी ॥ १५५॥

शोभावती शीलवती शोषिताशेषकिल्बिषा ।
शरण्या शिवदा शिष्टा शरजन्मप्रसूःशिवा ॥ १५६॥

शक्तिः शशाङ्कविमला शमनस्वसृसम्मता ।
शमा शमनमार्गघ्नी शितिकण्ठमहाप्रिया ॥ १५७॥

शुचिः शुचिकरी शेषा शेषशायिपदोद्भवा ।
श्रीनिवासश्रुतिः श्रद्धा श्रीमती श्रीः शुभव्रता ॥ १५८॥

शुद्धविद्या शुभावर्ता श्रुतानन्दा श्रुतिस्तुतिः ।
शिवेतरघ्नी शबरी शाम्बरीरूपधारिणी ॥ १५९॥

श्मशानशोधनी शान्ता शश्वच्छतधृतिस्तुता ।
शालिनी शालिशोभाढ्या शिखिवाहनगर्भभृत् ॥ १६०॥

शंसनीयचरित्रा च शातिताशेषपातका ।

षड्गुणैश्वर्यसम्पन्ना षडङ्गश्रुतिरूपिणी ॥ १६१॥

षण्ढताहारिसलिला स्त्यायन्नदनदीशता ।
सरिद्वारा च सुरसा सुप्रभा सुरदीर्घिका ॥ १६२॥

स्वः सिन्धुः सर्वदुःखघ्नी सर्वव्याधिमहौषधम् ।
सेव्या सिद्धिः सती सूक्तिः स्कन्दसूश्च सरस्वती ॥ १६३॥

सम्पत्तरङ्गिणी स्तुत्या स्थाणुमौलिकृतालया ।
स्थैर्यदा सुभगा सौख्या स्त्रीषु सौभाग्यदायिनी ॥ १६४॥

स्वर्गनिःश्रेणिका सूमा स्वधा स्वाहा सुधाजला । var सूक्ष्मा
समुद्ररूपिणी स्वर्ग्या सर्वपातकवैरिणी ॥ १६५॥

स्मृताघहारिणी सीता संसाराब्धितरण्डिका ।
सौभाग्यसुन्दरी सन्ध्या सर्वसारसमन्विता ॥ १६६॥

हरप्रिया हृषीकेशी हंसरूपा हिरण्मयी ।
हृताघसङ्घा हितकृद्धेला हेलाघगर्वहृत् ॥ १६७॥

क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा ।

गङ्गेति नामसाहस्रं गङ्गायाः कलशोद्भव । var इति नामसहस्रं हि
कीर्तयित्वा नरः सम्यग्गङ्गास्नानफलं लभेत् ॥ १६८॥

सर्वपापप्रशमनं सर्वविघ्नविनाशनम् ।
सर्वस्तोत्रजपाच्छ्रेष्ठं सर्वपावनपावनम् ॥ १६९॥

श्रद्धयाभीष्टफलदं चतुर्वर्गसमृद्धिकृत् ।
सकृज्जपादवाप्नोति ह्येकक्रतुफलं मुने ॥ १७०॥

सर्वतीर्थेषु यः स्नातः सर्वयज्ञेषु दीक्षितः ।
तस्य यत्फलमुद्दिष्टं त्रिकालपठनाच्च तत् ॥ १७१॥

सर्वव्रतेषु यत्पुण्यं सम्यक्चीर्णेषु वाडव ।
तत्फलं समवाप्नोति त्रिसन्ध्यं नियतः पठन् ॥ १७२॥

स्नानकाले पठेद्यस्तु यत्र कुत्र जलाशये ।

तत्र सन्निहिता नूनं गङ्गा त्रिपथगा मुने ॥ १७३॥

श्रेयोऽर्थी लभते श्रेयो धनार्थी लभते धनम् ।
कामी कामानवाप्नोति मोक्षार्थी मोक्षमाप्नुयात् ॥ १७४॥

वर्षं त्रिकालपठनाच्छ्रद्धया शुचिमानसः ।
ऋतुकालाभिगमनादपुत्रः  पुत्रवान् भवेत् ॥ १७५॥

नाकालमरणं तस्य नाग्निचोराहिसाध्वसम् ।
नाम्नां सहस्रं गङ्गाया यो जपेच्छ्रद्धया मुने ॥ १७६॥

गङ्गानामसहस्रं तु जप्त्वा ग्रामान्तरं व्रजेत् ।
कार्यसिद्धिमवाप्नोति निर्विघ्नो गेहमाविशेत् ॥ १७७॥

तिथिवारर्क्षयोगानां न दोषः प्रभवेत्तदा ।
यदा जप्त्वा व्रजेदेतत् स्तोत्रं ग्रामान्तरं नरः ॥ १७८॥

आयुरारोग्यजननं सर्वोपद्रवनाशनम् ।
सर्वसिद्धिकरं पुंसां गङ्गानामसहस्रकम् ॥ १७९॥

जन्मान्तरसहस्रेषु यत्पापं सम्यगर्जितम् ।
गङ्गानामसहस्रस्य जपनात्तत्क्षयं व्रजेत् ॥ १८०॥

ब्रह्मघ्नो मद्यपः स्वर्णस्तेयी च गुरुतल्पगः ।
तत्संयोगी भ्रूणहन्ता मातृहा पितृहा मुने ॥ १८१॥

विश्वासघाती गरदः कृतघ्नो मित्रघातकः ।
अग्निदो गोवधकरो गुरुद्रव्यापहारकः ॥ १८२॥

महापातकयुक्तोऽपि संयुक्तोऽप्युपपातकैः ।
मुच्यते श्रद्धया जप्त्वा गङ्गानामसहस्रकम् ॥ १८३॥

आधिव्याधिपरिक्षिप्तो घोरतापपरिप्लुतः ।
मुच्यते सर्वदुःखेभ्यः स्तवस्यास्यानुकीर्तनात् ॥ १८४॥

संवत्सरेण युक्तात्मा पठन् भक्तिपरायणः ।
अभीप्सितां लभेत्सिद्धिं सर्वैः पापैः प्रमुच्यते ॥ १८५॥

संशयाविष्टचित्तस्य धर्मविद्वेषिणोऽपि च ।
दाम्भिकस्यापि हिंस्रस्य चेतो धर्मपरं भवेत् ॥ १८६॥

वर्णाश्रमपथीनस्तु कामक्रोधविवर्जितः ।
यत्फलं लभते ज्ञानी तदाप्नोत्यस्य कीर्तनात् ॥ १८७॥

गायत्र्ययुतजप्येन यत्फलं समुपार्जितम् ।
सकृत्पठनतः सम्यक्तदशेषमवाप्नुयात् ॥ १८८॥

गां दत्त्वा वेदविदुषे यत्फलं लभते कृती ।
तत्पुण्यं सम्यगाख्यातं स्तवराजसकृज्जपात् ॥ १८९॥

गुरुशुश्रूषणं कुर्वन् यावज्जीवं नरोत्तमः ।
यत्पुण्यमर्जयेत्तद्भाग्वर्षं त्रिषवणं जपन् ॥ १९०॥

वेदपारायणात्पुण्यं यदत्र परिपठ्यते ।
तत्षण्मासेन लभते त्रिसन्ध्यं परिकीर्तनात् ॥ १९१॥

गङ्गायाः स्तवराजस्य प्रत्यहं परिशीलनात् ।
शिवभक्तिमवाप्नोति विष्णुभक्तोऽथवा भवेत् ॥ १९२॥

यः कीर्तयेदनुदिनं गङ्गानामसहस्रकम् ।
तत्समीपे सहचरी गङ्गादेवी सदा भवेत् ॥ १९३॥

सर्वत्र पूज्यो भवति सर्वत्र विजयी भवेत् ।
सर्वत्र सुखमाप्नोति जाह्नवीस्तोत्रपाठतः ॥ १९४॥

सदाचारी स विज्ञेयः स शुचिस्तु सदैव हि ।
कृतसर्वसुरार्चः स कीर्तयेद्य इमां स्तुतिम् ॥ १९५॥

तस्मिंस्तृप्ते भवेत् तृप्ता जाह्नवी नात्र संशयः ।
तस्मात्सर्वप्रयत्नेन गङ्गाभक्तं समर्चयेत् ॥ १९६॥

स्तवराजमिमं गाङ्गं शृणुयाद्यश्च वै पठेत् ।
श्रावयेदथ तद्भक्तान् दम्भलोभविवर्जितः ॥ १९७॥

मुच्यते त्रिविधैः पापैर्मनोवाक्कायसम्भवैः ।
क्षणान्निष्पापतामेति पितॄणां च प्रियो भवेत् ॥ १९८॥

सर्वदेवप्रियश्चापि सर्वर्षिगणसम्मतः ।
अन्ते विमानमारुह्य दिव्यस्त्रीशतसंवृतः ॥ १९९॥

दिव्याभरणसम्पन्नो दिव्यभोगसमन्वितः ।
नन्दनादिवने स्वैरं देववत्स प्रमोदते ॥ २००॥

भुज्यमानेषु विप्रेषु श्राद्धकाले विशेषतः ।
जपन्निदं महास्तोत्रं पितृणां तृप्तिकारकम् ॥ २०१॥

यावन्ति तत्र सिक्थानि यावन्तोऽम्बुकणाः स्थिताः ।
तावन्त्येव हि वर्षाणि मोदन्ते स्वपितामहाः ॥ २०२॥

यथा प्रीणन्ति पितरो प्रीणन्ति गङ्गायां पिण्डदानतः ।
तथैव तृप्नुयुः श्राद्धे स्तवस्यास्यानुसंश्रवात्  ॥ २०३॥

एतत्स्तोत्रं गृहे यस्य लिखितं परिपूज्यते ।
तत्र पापभयं नास्ति शुचि तद्भवनं सदा ॥ २०४॥

अगस्ते किं बहूक्तेन शृणु मे निश्चितं वचः ।
संशयो नात्र कर्तव्यः सन्देग्धरि फलं नहि ॥ २०५॥

यावन्ति मर्त्ये स्तोत्राणि मन्त्रजालान्यनेकशः ।
तावन्ति स्तवराजस्य गाङ्गेयस्य समानि न ॥ २०६॥

यावज्जन्म जपेद्यस्तु नाम्नामेतत्सहस्रकम् ।
स कीकटेष्वपि मृतो न पुनर्गर्भमाविशेत् ॥ २०७॥

नित्यं नियमवानेतद्यो जपेत्स्तोत्रमुत्तमम् ।
अन्यत्रापि विपन्नः स गङ्गातीरे मृतो भवेत् ॥ २०८॥

एतत्स्तोत्रवरं रम्यं पुरा प्रोक्तं पिनाकिना ।
विष्णवे निजभक्ताय मुक्तिबीजाक्षरास्पदम् ॥ २०९॥

गङ्गास्नानप्रतिनिधिः स्तोत्रमेतन्मयेरितम् ।
सिस्नासुर्जाह्नवीं तस्मादेतत्स्तोत्रं जपेत्सुधीः ॥ २१०॥

॥ इति श्रीस्कन्दपुराणे एकाशीतिसाहस्र्यां

संहितायां चतुर्थैकाशीखण्डेपूर्वार्धे
गङ्गासहस्रनामकथनं नामैकोनत्रिंशत्तमोऽध्यायः ॥

सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां
   करधृतकलशोद्यत्सोपलाभीत्यभीष्टाम् ।
विधिहरिरूपां सेन्दुकोटीरजूटां
   कलितसितदुकूलां जाह्नवी तां नमामि ॥

श्रीगङ्गासहस्रनामस्तोत्रम् २
श्रीबृहद्धर्मपुराणान्तर्गतम् पञ्चाशत्तमोऽध्यायः

श्रीशुक उवाच ।
जय देवी तदा गङ्गा तपस्यन्तं भगीरथम् ।
आत्मानं दर्शयामास श्वेतं चारुचतुर्भुजम् ॥ १॥ श्वेतरूपां चतुर्भुजां
तां दृष्ट्वा ध्यानमात्रैकलब्धां दृग्भ्याञ्च भूपतिः ।
अलभ्यलाभबोधेन बहुमेने नृपोत्तमः ॥ २॥

हर्षाकुलितसर्वाङ्गो रोमाञ्चितसुविग्रहः । हर्षाद्गलित
गङ्गदाक्षरया वाचा गङ्गां तुष्टाव भूपतिः ॥ ३॥

सहस्रनामभिर्दिव्यैः शक्तिं परमदेवताम् ।
भगीरथ उवाच ।
अहं भगीरथो राजा दिलीपतनयः शिवे ॥ ४॥

प्रणमामि पदद्वन्द्वं भवत्या अतिदुर्लभम् ।
पूर्वजानां हि पुण्येन तपसा परमेण च ॥ ५॥

मच्चक्षुर्गोचरीभूता त्वं गङ्गा करुणामयी ।
सार्थकं सूर्यवंशे मे जन्म प्राप्तं महेश्वरी ॥ ६॥ वंशो
कृतार्थोऽस्मि कृतार्थोऽस्मि कृतार्थोऽस्मि न संशयः ।
नमो नमो नमस्तेऽस्तु गङ्गे राजीवलोचने ॥ ७॥

देहोऽयं सार्थको मेऽस्तु सर्वाङ्गैः प्रणमाम्यहम् ।
सहस्रनामभिः स्तुत्वा वाचं सार्थकयाम्यहम् ॥ ८॥ सहस्रनामभिरित्यादि
शुक उवाच ।
गङ्गा सहस्रनाम्नोऽस्य स्तवस्य पुण्यतेजसः ।
ऋषिर्व्यासस्तथाऽनुष्टुप्छन्दो विप्र प्रकीर्तितम् ॥ ९॥

सामूलप्रकृतिर्देवी गङ्गा मे देवतेरिता ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ॥ १०॥

वाजपेयशतस्याऽपि गयाश्राद्धशतस्य च ।
ब्रह्महत्यादिपापानां क्षये च परदुष्करे ।
निर्वाणमोक्षलाभे च विनियोगः प्रकीर्तितः ॥ ११॥

अथ सहस्रनामस्तोत्रम् ।

ॐकाररूपिणी देवी श्वेता सत्यस्वरूपिणी ।
शान्तिः शान्ता क्षमा शक्तिः परा परमदेवता ॥ १२॥

विष्णुर्नारायणी काम्या कमनीया महाकला ।
दुर्गा दुर्गतिसंहन्त्री गङ्गा गगणवासिनी ॥ १३॥

शैलेन्द्रवासिनी दुर्गवासिनी दुर्गमप्रिया ।
निरञ्जना च निर्लेशा निष्कला निरहङ्क्रिया ॥ १४॥ निर्लेपा
प्रसन्ना शुक्लदशना परमार्था पुरातनी ।
निराकारा च शुद्धा च ब्राह्मणी ब्रह्मरूपिणी ॥ १५॥ ब्रह्माणी
दया दयावती दीर्घा दीर्घवक्त्रा दुरोदरा ।
शैलकन्या शैलराजवासिनी शैलनन्दिनी ॥ १६॥

शिवा शैवी शाम्भवी च शङ्करी शङ्करप्रिया ।
मन्दाकिनी महानन्दा स्वर्धुनी स्वर्गवासिनी ॥ १७॥

मोक्षाख्या मोक्षसरणिर्मुक्तिर्मुक्तिप्रदायिनी ।
जलरूपा जलमयी जलेशी जलवासिनी ॥ १८॥ जलवाहिनी
दीर्घजिह्वा करालाक्षी विश्वाख्या विश्वतोमुखी ।
विश्वकर्णा विश्वदृष्टिर्विश्वेशी विश्ववन्दिता ॥ १९॥

वैष्णवी विष्णुपादाब्जसम्भवा विष्णुवासिनी ।
विष्णुस्वरूपिणी वन्द्या बाला वाणी बृहत्तरा ॥ २०॥

पीयूषपूर्णा पीयूषवासिनी मधुरद्रवा ।
सरस्वती च यमुना च गोदा गोदावरी वरी ॥ २१॥ तथा
वरेण्या वरदा वीरा वरकन्या वरेश्वरी ।
बल्लवी बल्लवप्रेष्ठा वागीश्वरा वारिरूपिणी ॥ २२॥

वाराही वनसंस्था च वृक्षस्था वृक्षसुन्दरी ॥ २३॥

वारुणी वरुणज्येष्ठा वरा वरुणवल्लभा । वरुणश्रेष्ठा
वरुणप्रणता दिव्या वरुणानन्दकारिणी ॥ २४॥

वन्द्या वृन्दावनी वृन्दारकेड्या वृषवाहिनी । वृन्दा वृषवाहिना
दाक्षायणी दक्षकन्या श्यामा परमसुन्दरी ॥ २५॥

शिवप्रिया शिवाराध्या शिवमस्तकवासिनी ।

शिवमस्तकमस्ता च विष्णुपादपदा तथा ॥ २६॥

विपत्तिकासिनी दुर्गतारिणी तारिणीश्वरी । विपत्तिनाशिनी
गीता पुण्यचरित्रा च पुण्यनाम्नी शुचिश्रवा ॥ २७॥

श्रीरामा रामरूपा च रामचन्द्रैकचन्द्रिका ।
राघवी रघुवंशेशी सूर्यवंशप्रतिष्ठिता ॥ २८॥

सूर्या सूर्यप्रिया सौरी सूर्यमण्डलभेदिनी ॥ २९॥ शौरी
भगिनी भाग्यदा भव्या भाग्यप्राप्या भगेश्वरी ।
भव्योच्चयोपलब्धा च कोटिजन्मतपःफला ॥ ३०॥

तपस्विनी तापसी च तपन्ती तापनाशिनी ।
तन्त्ररूपा तन्त्रमयी तन्त्रगोप्या महेश्वरी ॥ ३१॥

variations मन्दरूपा मन्दमयी मन्दगोप्या मखेश्वरी
मन्त्ररूपा मन्त्रमयी मन्त्रगोप्या मखेश्वरी
विष्णुदेहद्रवाकारा शिवगानामृतोद्भवा ।
आनन्दद्रवरूपा च पूर्णानन्दमयी शिवा ॥ ३२॥

कोटिसूर्यप्रभा पापध्वान्तसंहारकारिणी ।
पवित्रा परमा पुण्या तेजोधारा शशिप्रभा ।
शशिकोटिप्रकाशा च त्रिजगदीप्तिकारिणी ॥ ३३॥

सत्या सत्यस्वरूपा च सत्यज्ञा सत्यसम्भवा ।
सत्याश्रया सती श्यामा नवीना नरकान्तका ॥ ३४॥

सहस्रशीर्षा देवेशी सहस्राक्षी सहस्रपात् ।
लक्षवक्त्रा लक्षपादा लक्षहस्ता विलक्षणा ॥ ३५॥

सदा नूतनरूपा च दुर्लभा सुलभा शुभा ।
रक्तवर्णा च रक्ताक्षी त्रिनेत्रा शिवसुन्दरी ॥ ३६॥

भद्रकाली महाकाली लक्ष्मीर्गगणवासिनी ।
महाविद्या शुद्धविद्या मन्त्ररूपा सुमन्त्रिता ॥ ३७॥

राजसिंहासनतटा राजराजेश्वरी रमा ।
राजकन्या राजपूज्या मन्दमारुतचामरा ॥ ३८॥

वेदवन्दिप्रगीता च वेदवन्दिप्रवन्दिता ।
वेदवन्दिस्तुता दिव्या वेदवन्दिसुवर्णिता ॥ ३९॥

सुवर्णा वर्णनीया च सुवर्णगाननन्दिता ।
सुवर्णदानलभ्या च गानानन्दप्रियाऽमला ॥ ४०॥

माला मालावती माल्या मालती कुसुमप्रिया । मान्या
दिगम्बरी दुष्टहन्त्री सदा दुर्गमवासिनी ॥ ४१॥

अभया पद्महस्ता च पीयूषकरशोभिता ।
खड्गहस्ता भीमरूपा श्येनी मकरवाहिनी ॥ ४२॥

शुद्धस्रोता वेगवती महापाषाणभेदिनी ।
पापाली रोदनकरी पापसंहारकारिणी ॥ ४३॥

यातनाय च वैधव्यदायिनी पुण्यवर्धिनी ।
गभीराऽलकनन्दा च मेरुशृङ्गविभेदिनी ॥ ४४॥

स्वर्गलोककृतावासा स्वर्गसोपानरूपिणी ।
स्वर्गङ्गा पृथिवीगङ्गा नरसेव्या नरेश्वरी ॥ ४५॥

सुबुद्धिश्च कुबुद्धिश्च श्रीर्लक्ष्मीः कमलालया ॥ ४६॥

पार्वती मेरुदौहित्री मेनकागर्भसम्भवा ।
अयोनिसम्भवा सूक्ष्मा परमात्मा परत्त्वदा ॥ ४७॥

विष्णुजा विष्णुजनिका विष्णुपादनिवासिनी । शिवमस्तकवासिनी
देवी विष्णुपदी पद्या जाह्नवी पद्मवासिनी ॥ ४८॥

पद्मा पद्मावती पद्मधारिणी पद्मलोचना ।
पद्मपादा पद्ममुखी पद्मनाभा च पद्मिनी ॥ ४९॥

पद्मगर्भा पद्मशया महापद्मगुणाधिका ।
पद्माक्षी पद्मललिता पद्मवर्णा सुपद्मिनी ॥ ५०॥

सहस्रदलपद्मस्था पद्माकरनिवासिनी ।
महापद्मपुरस्था च पुरेशी परमेश्वरी ॥ ५१॥

हंसी हंसविभूषा च हंसराजविभूषणा ।
हंसराजसुवर्णा च हंसारूढा च हंसिनी ॥ ५२॥

हंसाक्षरस्वरूपा च द्व्यक्षरा मन्त्ररूपिणी ।
आनन्दजलसम्पूर्णा श्वेतवारिप्रपूरिका ॥ ५३॥

अनयाससदामुक्त्यिर्योग्याऽयोग्यविचारिणी ॥ ५४॥

तेजोरूपजलापूर्णा तैजसी दीप्तिरूपिणी ।
प्रदीपकलिकाकारा प्राणायामस्वरूपिणी ॥ ५५॥

प्राणदा प्राणनीया च महौषधस्वरूपिणी । महौषधिस्वरूपिणी
महौषधजला चैव पापरोगचिकित्सका ॥ ५६॥ पापरोगचिकित्सिका
कोटिजन्मतपोलक्ष्या प्राणत्यागोत्तराऽमृता ।
निःसन्देहा निर्महिमा निर्मला मलनाशिनी ॥ ५७॥

शवारूढा शवस्थानवासिनी शववत्तटी ।
श्मशानवासिनी केशकीकसाचिततीरिणी ॥ ५८॥

भैरवी भैरवश्रेष्ठसेविता भैरवप्रिया ।
भैरवप्राणरूपा च वीरसाधनवासिनी ॥ ५९॥

वीरप्रिया वीरपत्नी कुलीना कुलपण्डिता ।
कुलवृक्षस्थिता कौली कुलकोमलवासिनी ॥ ६०॥

कुलद्रवप्रिया कुल्या कुल्यमालाजपप्रिया ।
कौलदा कुलरक्षित्री कुलवारिस्वरूपिणी ॥ ६१॥

रणश्रीः रणभूः रम्या रणोत्साहप्रिया रणे । बलिः
नृमुण्डमालाभरणा नृमुण्डकरधारिणी ॥ ६२॥

विवस्त्रा च सवस्त्रा च सूक्ष्मवस्त्रा च योगिनी ।
रसिका रसरूपा च जिताहारा जितेन्द्रिया ॥ ६३॥

यामिनी चार्धरात्रस्था कूर्च्चवीजस्वरूपिणी ।
लज्जाशक्तिश्च वाग्रूपा नारी नरकहारिणी ॥ ६४॥ लज्जाशान्ति, नरकवाहिनी
तारा तारस्वराढ्या च तारिणीताररूपिणी ।

अनन्ता चादिरहिता मध्यशून्यास्वरूपिणी ॥ ६५॥

नक्षत्रमालिनी क्षीणा नक्षत्रस्थलवासिनी ।
तरुणादित्यसङ्काशा मातङ्गी मृत्युवर्जिता ॥ ६६॥

अमरामरसंसेव्या उपास्या शक्तिरूपिणी ।
धूमाकाराग्निसम्भूता धूमा धूमावती रतिः ॥ ६७॥

कामाख्या कामरूपा च काशी काशीपुरस्थिता ।
वाराणसी वारयोषित् काशीनाथशिरःस्थिता ॥ ६८॥

अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका ।
द्वारका ज्वलदग्निश्च केवला केवलत्वदा ॥ ६९॥

करवीरपुरस्था च कावेरी कवरी शिवा ।
रक्षिणी च करालाक्षी कङ्काला शङ्करप्रिया ॥ ७०॥

ज्वालामुखी क्षीरिणी च क्षीरग्रामनिवासिनी ।
रक्षाकरी दीर्घकर्णा सुदन्तादन्तवर्जिता ॥ ७१॥

दैत्यदानवसंहन्त्री दुष्टहन्त्री बलिप्रिया ।
बलिमांसप्रिया श्यामा व्याघ्रचर्मापिधायिनी ॥ ७२॥

जवाकुसुमसङ्काशा सात्त्विकी राजसी तथा ।
तामसी तरुणी वृद्धा युवती बालिका तथा ॥ ७३॥

यक्षराजसुता जाम्बुमालिनी जम्बुवासिनी ।
जाम्बूनदविभूषा च ज्वलजाम्बूनदप्रभा ॥ ७४॥

रुद्राणी रुद्रदेहस्था रुद्रा रुद्राक्षधारिणी ।
अणुश्च परमाणुश्च ह्रस्वा दीर्घा चकोरिणी ॥ ७५॥

रुद्रगीता विष्णुगीता महाकाव्यस्वरूपिणी ।
आदिकाव्यस्वरूपा च महाभारतरूपिणी ॥ ७६॥

अष्टादशपुराणस्था धर्ममाता च धर्मिणी ।
माता मान्या स्वसा चैव श्वश्रूश्चैव पितामही ॥ ७७॥

गुरुश्च गुरुपत्नी च कालसर्पभयप्रदा ।
पितामहसुता सीता शिवसीमन्तिनी शिवा ॥ ७८॥

रुक्मिणी रुक्मवर्णा च भैष्मी भैमी सुरूपिणी । स्वरूपिणी
सत्यभामा महालक्ष्मी भद्रा जाम्बवती मही ॥ ७९॥

नन्दा भद्रमुखी रिक्ता जया विजयदा जया ।
जयित्री पूर्णिमा पूर्णा पूर्णचन्द्रनिभानना ॥ ८०॥

गुरुपूर्णा सौम्यभद्रा विष्टिः संवेशकारिणी ।
शनिरिक्ता कुजजया सिद्धिदा सिद्धिरूपिणी ॥ ८१॥

अमृताऽमृतरूपा च श्रीमती च जलामृता ॥ ८२॥

निरातङ्का निरालम्बा निष्प्रपञ्चा विशेषिणी ।
निषेधशेषरूपा च वरिष्ठा योषितांवरा ॥ ८३॥

यशस्विनी कीर्तिमती महाशैलाग्रवासिनी ।
धरा धरित्री धरणी सिन्धुर्बन्धुः सबान्धवा ॥ ८४॥

सम्पत्तिः सम्पदीशा च विपत्तिपरिमोचिनी ।
जन्मप्रवाहहरणी जन्मशून्या निरञ्जनी ॥ ८५॥

नागालयालया नीला जटामण्डलधारिणी ।
सुतरङ्गजटाजूटा जटाधरशिरःस्थिता ॥ ८६॥

पट्टाम्बरधरा धीरा कविः काव्यरसप्रिया ।
पुण्यक्षेत्रा पापहरा हरिणी हारिणी हरिः ॥ ८७॥

हरिद्रानगरस्था च वैद्यनाथप्रिया बलिः ।
वक्रेश्वरी वक्रधारा वक्रेश्वरपुरःस्थिता ॥ ८८॥

श्वेतगङ्गा शीतला च उष्मोदकमयी रुचिः । उष्णोदकमयी
चोलराजप्रियकरी चन्द्रमण्डलवर्त्तिनी ॥ ८९॥

आदित्यमण्डलगता सदादित्या च काश्यपी ।
दहनाक्षी भयहरा विषज्वालानिवारिणी ॥ ९०॥

हरा दशहरा स्नेहदायिनी कलुषाशनिः ।
कपालमालिनी काली कला कालस्वरूपिणी ॥ ९१॥

इन्द्राणी वारुणि वाणी बलाका बालशङ्करी ।
गोर्गीर्ह्रीर्धर्मरूपा च धीः श्रीर्धन्या धनञ्जया ॥ ९२॥

वित् संवित् कुः कुवेरी भूर्भूतिर्भूमिधराधरा ।
ईश्वरी ह्रीमती क्रीडा क्रीडासाया जयप्रदा ॥ ९३॥

जीवन्ती जीवनी जीवा जयाकारा जयेश्वरी ।
सर्वोपद्रवसंशून्या सर्वपापविवर्जिता ॥ ९४॥

सावित्री चैव गायत्री गणेशी गणवन्दिता ।
दुष्प्रेक्षा दुष्प्रवेशा च दुर्दर्शा च सुयोगिणी ॥ ९५॥

दुःखहन्त्री दुःखहरा दुर्दान्ता यमदेवता ।
गृहदेवी भूमिदेवी वनेशी वनदेवता ॥ ९६॥

गुहालया घोररूपा महाघोरनितम्बिनी । गृहालया
स्त्रीचञ्चला चारुमुखी चारुनेत्रा लयात्मिका ॥ ९७॥

कान्तिः काम्या निर्गुणा च रजःसत्त्वतमोमयी । कान्तिकाम्या
कालरात्रिर्महारात्रिर्जीवरूपा सनातनी ॥ ९८॥

सुखदुःखादिभोक्त्री च सुखदुःखादिवर्जिता ।
महावृजिनसंहारा वृजिनध्वान्तमोचनी ॥ ९९॥

हलिनी खलहन्त्री च वारुणीपानकारिणी । पापकारिणी
निद्रायोग्या महानिद्रा योगनिद्रा युगेश्वरी ॥ १००॥

उद्धारयित्री स्वर्गङ्गा उद्धारणपुरःस्थिता ।
उद्धृता उद्धृताहारा लोकोद्धारणकारिणी ॥ १०१॥

शङ्खिनी शङ्खधात्री च शङ्खवादनकारिणी । शङ्खधारी
शङ्खेश्वरी शङ्खहस्ता शङ्खराजविदारिणी ॥ १०२॥

पश्चिमास्या महास्रोता पूर्वदक्षिणवाहिनी ।
सार्धयोजनविस्तीर्णा पावन्युत्तरवाहिनी ॥ १०३॥

पतितोद्धारिणी दोषक्षमिणी दोषवर्जिता ।
शरण्या शरणा श्रेष्ठा श्रीयुता श्राद्धदेवता ॥ १०४॥

स्वाहा स्वधा स्वरूपाक्षी सुरूपाक्षी शुभानना । विरूपाक्षी
कौमुदी कुमुदाकारा कुमुदाम्बरभूषणा ॥ १०५॥

सौम्या भवानी भूतिस्था भीमरूपा वरानना ।
वराहकर्णा बर्हिष्ठा बृहच्छ्रोणी बलाहका ॥ १०६॥ वराहवर्णा
वेशिनी केशपाशाढ्या नभोमण्डलवासिनी ।
मल्लिका मल्लिकापुष्पवर्णा लाङ्गलधारिणी ॥ १०७॥

तुलसीदलगन्धाढ्या तुलसीदामभूषणा ।
तुलसीतरुसंस्था च तुलसीरसलेहिनी । तुलसीरसगेहिनी
तुलसीरससुस्वादुसलिला विल्ववासिनी ॥ १०८॥

विल्ववृक्षनिवासा च विल्वपत्ररसद्रवा ।
मालूरपत्रमालाढ्या वैल्वी शैवार्धदेहिनी ॥ १०९॥

अशोका शोकरहिता शोकदावाग्निहृज्जला ।
अशोकवृक्षनिलया रम्भा शिवकरस्थिता ॥ ११०॥

दाडिमी दाडिमीवर्णा दाडिमस्तनशोभिता ।
रक्ताक्षी वीरवृक्षस्था रक्तिनी रक्तदन्तिका ॥ १११॥

रागिणी रागभार्या च सदारागविवर्जिता ।
विरागरागसम्मोदा सर्वरागस्वरूपिणी ॥ ११२॥

तानस्वरूपिणी तालरूपिणी तारकेश्वरी ॥ ११३॥ तालस्वरूपिणी तालकेशरी
वाल्मीकिश्लोकिताष्टेड्या ह्यनन्तमहिमादिमा । लोकिताष्टोद्या
माता उमा सपत्नी च धराहारावलिः शुचिः ॥ ११४॥ हारावली
स्वर्गारोहपताका च इष्टा भागीरथी इला ।
स्वर्गभीरामृतजला चारुवीचिस्तरङ्गिणी ॥ ११५॥

ब्रह्मतीरा ब्रह्मजला गिरिदारणकारिणी ।
ब्रह्माण्डभेदिनी घोरनादिनी घोरवेगिनी ॥ ११६॥

ब्रह्माण्डवासिनी चैव स्थिरवायुप्रभेदिनी ।

शुक्रधारामयी दिव्यशङ्खवाद्यानुसारिणी ॥ ११७॥

ऋषिस्तुता शिवस्तुत्या ग्रहवर्गप्रपूजिता । सुरस्तुत्या
सुमेरुशीर्षनिलया भद्रा सीता महेश्वरी ॥ ११८॥

वङ्क्षुश्चालकनन्दा च शैलसोपानचारिणी ।
लोकाशापूरणकरी सर्वमानसदोहनी ॥ ११९॥

त्रैलोक्यपावनी धन्या पृथ्वीरक्षणकारिणी ।
धरणी पार्थिवी पृथ्वी पृथुकीर्तिर्निरामया ॥ १२०॥

ब्रह्मपुत्री ब्रह्मकन्या ब्रह्ममान्या वनाश्रया ।
ब्रह्मरूपा विष्णुरूपा शिवरूपा हिरण्मयी ॥ १२१॥

ब्रह्मविष्णुशिवत्वाढ्या ब्रह्मविष्णुशिवत्वदा ।
मज्जज्जनोद्धारिणी च स्मरणार्तिविनाशिनी ॥ १२२॥

स्वर्गदायिसुखस्पर्शा मोक्षदर्शनदर्पणा । स्वर्गदात्री
आरोग्यदायिनी नीरुक् नानातापविनाशिनी ॥ १२३॥

तापोत्सारणशीला च तपोधामा श्रमापहा । तपोधाना
सर्वदुःखप्रशमनी सर्वशोकविमोचनी ॥ १२४॥

सर्वश्रमहरा सर्वसुखदा सुखसेविता ।
सर्वप्रायश्चित्तमयी वासमात्रमहातपाः ॥ १२५॥

सतनुर्निस्तनुस्तन्वी तनुधारणवारिणी ।
महापातकदावाग्निः शीतला शशधारिणी ॥ १२६॥

गेया जप्या चिन्तनीया ध्येया स्मरणलक्षिता ।
चिदानन्दस्वरूपा च ज्ञानरूपागमेश्वरी ॥ १२७॥

आगम्या आगमस्था च सर्वागमनिरूपिता ।
इष्टदेवी महादेवी देवनीया दिविस्थिता ॥ १२८॥

दन्तावलगृही स्थात्री शङ्कराचार्यरूपिणी । दन्तीवलगृहस्थात्री
शङ्कराचार्यप्रणता शङ्कराचार्यसंस्तुता ॥ १२९॥

शङ्कराभरणोपेता सदा शङ्करभूषणा ।
शङ्कराचारशीला च शङ्क्या च शङ्करेश्वरी ॥ १३०॥

शिवस्रोताः शम्भुमुखी गौरी गगणगेहिनी । गगणदेहिनी
दुर्गमा सुगमा गोप्या गोपिनी गोपवल्लभा ॥ १३१॥ गोपनी
गोमती गोपकन्या च यशोदानन्दनन्दिनी ।
कृष्णानुजा कंसहन्त्री ब्रह्मराक्षसमोचनी ।
शापसम्मोचनी लङ्का लङ्केशी च विभीषणा ॥ १३२॥

विभीषाभरणीभूषा हारावलिरनुत्तमा । विभीषाभूषणीभूषा
तीर्थस्तुता तीर्थवन्द्या महातीर्थञ्च तीर्थसूः ॥ १३३॥ महातीर्था च
कन्या कल्पलता केलीः कल्याणी कल्पवासिनी
कलिकल्मषसंहन्त्री कालकाननवासिनी ।
कालसेव्या कालमयी कालिका कामुकोत्तमा
कामदा कारणाख्या च कामिनी कीर्तिधारिणी ॥ १३४॥

कोकामुखी कोरकाक्षी कुरङ्गनयनी करिः । कोटराक्षी
कज्जलाक्षी कान्तिरूपा कामाख्या केशरिस्थिता ॥ १३५॥

खगा खलप्राणहरा खलदूरकरा खला ।
खेलन्ती खरवेगा च खकारवर्णवासिनी ॥ १३६॥

गङ्गा गगणरूपा च गगणाध्वप्रसारिणी ।
गरिष्ठा गणनीया च गोपाली गोगणस्थिता ॥ १३७॥

गोपृष्ठवासिनी गम्या गभीरा गुरुपुष्करा ।
गोविन्दा गोस्वरूपा च गोनाम्नी गतिदायिनी ॥ १३८॥

घूर्णमाना घर्महरा घूर्णत्स्रोता घनोपमा । घूर्णहरा
घूर्णाख्यदोषहरणी घूर्णयन्ती जगत्त्रयम् ॥ १३९॥ घूर्णाक्षी
घोरा धृतोपमजला घर्घरारवघोषिणी । घोषणी
घोराङ्घोघातिनी घुव्या घोषा घोराघहारिणी ॥ १४०॥ घोराघघारिणी
घोषराजी घोषकन्या घोषनीया घनालया ।
घण्टाटङ्कारघटिता घाङ्कारी घङ्घचारिणी ॥ १४१॥

ङान्ता ङकारिणी ङेशी ङकारवर्णसंश्रया ।
चकोरनयनी चारुमुखी चामरधारिणी ॥ १४२॥

चन्द्रिका शुक्लसलिला चन्द्रमण्डलवासिनी ।
चौकारवासिनी चर्च्या चमरी चर्मवासिनी ॥ १४३॥ चोहारवासिनी चर्या
चर्महस्ता चन्द्रमुखी चुचुकद्वयशोभिनी । चन्द्रहस्ता
छत्रिला छत्रिताघाविश्छत्रचामरशोभिता ॥ १४४॥ छत्रिनी छत्रिता धारि
छत्रिता छद्मसहन्त्री डुरित ब्रह्मरूपिणी । छुरितुर्ब्रह्मरूपिणी
छाया च स्थलशून्या च छलयन्ती छलान्विता ॥ १४५॥ छलशून्या
छिन्नमस्ता छलधरा छवर्णा छुरिता छविः । छविता
जीमूतवासिनी जिह्वा जवाकुसुमसुन्दरी ॥ १४६॥

जराशून्या जया ज्वाला जविनी जीवनेश्वरी ।
ज्योतीरूपा जन्महरा जनार्दनमनोहरा ॥ १४७॥

झङ्कारकारिणी झञ्झा झर्झरीवाद्यवादिनी ।
झणन्नूपुरसंशब्दा झरा ब्रह्मझरा झरा ॥ १४८॥

ङ्कारेशी ङ्कारस्था ञ्वर्णमध्यनामिका ।
टङ्कारकारिणी टङ्कधारिणी टुण्ठुकाटला ॥ १४९॥ टुण्टुकाटका
ठक्कुराणी टद्द्वयेशी ठङ्कारी ठक्कुरप्रिया ।
डामरी डामराधीशा डामरेशशिरःस्थिता ॥ १५०॥

डमरुध्वनिनृत्यन्ती डाकिनीभयहारिणी ।
डीना डयित्री डिण्डी च डिण्डीध्वनिसदास्पृहा ॥ १५१॥

ढक्कारवा च ढक्कारी ढक्कावादनभूषणा । ढक्कावनादभूषणा
णकारवर्णधवला णकारी यानभाविनी ॥ १५२॥ वर्णप्रवणा  याण
तृतीया तीव्रपापघ्नी तीव्रा तरणिमण्डला ।
तुषारकतुलास्या च तुषारकरवासिनी ॥ १५३॥ तुषारकरतुल्या स्यात्
थकाराक्षी थवर्णस्था दन्दशूकविभूषणा । मकराक्षी
दीर्घचक्षुर्दीर्घधारा धनरूपा धनेश्वरी ॥ १५४॥

दूरदृष्टिर्दूरगमा दृतगन्त्री द्रवाश्रया ।
नारीरूपा नीरजाक्षी नीररूपा नरोत्तमा ॥ १५५॥

निरञ्जना च निर्लेपा निष्कला निरहङ्क्रिया ।
परा परायणा पक्षा पारायणपरायणा ।
पारयित्री पण्डिता च पण्डा पण्डितसेविता ॥ १५६॥ पारयत्री
परा पवित्रा पुण्याख्या पालिका पीतवासिनी । पाणिका
फुत्कारदूरदुरिता फालयन्ती फणाश्रया ॥ १५७॥

फेनिला फेनदशना फेना फेनवती फणा ।
फेत्कारिणी फणिधरा फणिलोकनिवासिनी ॥ १५८॥

फाण्टाकृतालया फुल्ला फुज्जारविन्दलोचना ।
वेणीधरा बलवती वेगवतिधरावहा ॥ १५९॥

वन्दारुवन्द्या वृन्देशी वनवासा वनाशया । वनाश्रया
भीमराजी भीमपत्नी भवशीर्षकृतालया ॥ १६०॥

भास्करा भास्करधरा भूषा भास्करवादिनी । भाङ्कारवादिनी
भयङ्करी भयहरा भीषणा भूमिभेदिनी ॥ १६१॥

भगभाग्यवती भव्या भवदुःखनिवारिणी ।
भेरुण्डा भीमसुगमा भद्रकाली भवस्थिता ॥ १६२॥ भेरुसुगमा
मनोरमा मनोज्ञा च मृतमोक्षा महामतिः ।
मतिदात्री मतिहरा मटस्था मोक्षरूपिणी ॥ १६३॥

यमपूज्या यज्ञरूपा यजमाना यमस्वसा । यजमानी
यमदण्डस्वरूपा च यमदण्डहरा यतिः ॥ १६४॥

रक्षिका रात्रिरूपा च रमणीया रमा रतिः ।
लवङ्गी लेशरूपा च लेशनीया लयप्रदा ॥ १६५॥

विबुद्धा विषहस्ता च विशिष्टा वेशधारिणी ।
श्यामरूपा शरत्कन्या शारदी शवला श्रुता ॥ १६६॥ शरणा शरला
श्रुतिगम्या श्रुतिस्तुत्या श्रीमुखी शरणप्रदा । शरणप्रिया
षष्ठी षट्कोणनिलया षट्कर्मपरिसेविता ॥ १६७॥

सात्त्विकी सत्वसरणिः सानन्दा सुखरूपिणी । सत्यसरणिः
हरिकन्या हरिजला हरिद्वर्णा हरीश्वरी ॥ १६८॥ हरेश्वरी
क्षेमङ्करी क्षेमरूपा क्षुरधाराम्बुलेशिनी ।
अनन्ता इन्दिरा ईशा उमा ऊषा ऋवर्णिका ॥ १६९॥

ॠस्वरूपा ऌकारस्था ॡकारी एषिता तथा । एधिता एषिका
ऐश्वर्यदायिनी ओकारिणी औमककारिणी ॥ १७०॥

अन्तशून्या अङ्कधरा अस्पर्शा अस्त्रधारिणी ।

सर्ववर्णमयी वर्णब्रह्मरूपाखिलात्मिका ॥ १७१॥

प्रसन्ना शुक्लदशना परमार्था पुरातनी ।

शुक उवाच ।
इमं सहस्रनामाख्यं भगीरथकृतं पुरा ।
भगवत्या हि गङ्गाया महापुण्यं जयप्रदम् ॥ १७२॥

यः पठेच्छृणुयाद्वापि भक्त्या परमया युतः । पठेद्वा पाठयेद्वापि
तस्य सर्वं सुसिद्धं स्याद्विनियुक्तं फलं द्विज ॥ १७३॥

गङ्गैव वरदा तस्य भवेत् सर्वार्थदायिनी ।
ज्यैष्ठे दशहरातिथ्यां पूजयित्वा सदाशिवाम् ॥ १७४॥

दुर्गोत्सव विधानेन विधिना गमिकेन वा ।
गङ्गा सहस्रनामाख्यं स्तवमेनमुदाहरेत् ॥ १७५॥

तस्य संवत्सरं देवी गहे बद्धैव तिष्ठति ।
पुत्रोत्सवे विवाहादौ श्राद्धाहे जन्मवासरे ॥ १७६॥

पठेद्वा शृणुयाद्वापि तत्तत्कर्माक्षयं भवेत् ।
धनार्थीधनमाप्नोति लभेद्भार्यामभार्यकः ॥ १७७॥

अपुत्रो लभते पुत्रं चातुर्वर्ण्यार्थसाधकम् । पुत्रान् साधिकम्
युगाद्यासु पूर्णिमासु रविसङ्क्रमणे तथा ॥ १७८॥

दिनक्षये व्यतीपाते पुष्यायां हरिवासरे ।
अमावास्यासु सर्वासु अतिथौ च समागते ॥ १७९॥

शुश्रूषौ सति सत्सङ्गे गवां स्थानगतोऽपि वा । सद्गङ्गे
मण्डले ब्राह्मणानाञ्च पठेद्वा शृणुयात् स्तवम् ॥ १८०॥

स्तवेनानेन सा गङ्गा महाराजे भगीरथे ।
बभूव परमप्रीता तपोभिः पूर्वजैर्यथा ॥ १८१॥

तस्माद्यो भक्तिभावेन स्तवेनानेन स्तौति च ।
तस्यापि तादृशी प्रीता सगरादितपो यथा ।
स्तवेनानेन सन्तुष्टा देवी राज्ञे वरं ददौ ॥ १८२॥

देव्युवाच ।
वरम्वरय भूपाल वरदास्मि तवागता ।
जाने तव हृदिस्थञ्च तथापि वद कथ्यते ॥ १८३॥

राजोवाच ।
देवी विष्णोः पदं त्यक्त्वा गत्वापि विवरस्थलम् ।
उद्धारय पितॄण् पूर्वान् धरामण्डलवर्त्मना ॥ १८४॥ सर्वान्
अस्तौषं भवतीं यच्च तेन यः स्तौति मानवः ।
न त्याज्यः स्यात्त्वया सोऽपि वर एष द्वितीयकः ॥ १८५॥

देव्युवाच ।
एवमस्तु महाराज कन्यास्मि तव विश्रुता ।
भागीरथीति गेयां स्यां वर एषोऽधिकस्तव ॥ १८६॥ गेयां मां
मां स्तोष्यति जनो यस्तु त्वत्कृतेन स्तवेन हि ।
तस्याऽहं वशगा भूयां निर्वाणमुक्तिदा नृप ।
शिव आराध्यतां राजन् शिरसा मां दधातु सः ॥ १८७॥

अन्यथाऽहं निरालम्बा धरां भित्वाऽन्यथा व्रजे ।
पृथिवी च न मे वेगं सहिष्यति कदाचन ॥ १८८॥

सुमेरुशिर आरुह्य शङ्खध्वानं करिष्यसि ।
तेन त्वामनुयास्यामि ब्रह्माण्डकोटिभेदिनी ॥ १८९॥

शुक उवाच ।
इत्युक्त्वा सा तदा देवी तत्रैवान्तरधीयत ॥ १९०॥

भगीरथोऽपि राजर्षिरात्मानं बहमन्यत ॥ १९१॥

॥ इति श्रीबृहद्धर्मपुराणे मध्यखण्डे गङ्गासहस्रनामवर्णने
पञ्चाशत्तमोऽध्यायः ॥

# अथ श्री गङ्गा सहस्रनाम स्तोत्रम्

ध्यानम्

शैलेन्द्रादवतारिणी निजजले मज्जद्जनोत्तारिणी
पारावारविहारिणी भवभयश्रेणी समुत्सारिणी
शेषाहेरनुकारिणी हरशिरोवल्लीदलाकारिणी
काशीप्रान्तविहारिणी विजयते गङ्गा मनोहारिणी

ॐ नमो गङ्गादेव्यै
ॐकाररूपिण्यजरातुलानन्तामृतस्रवा
अत्युदाराभयाशोकालकनन्दामृतामला १
अनाथवत्सलामोघापंयोनिरमृतप्रदा
अव्यक्तलक्षणाक्षोभ्यानवच्छिन्नापराजिता २
अनाथनाथाभिष्टार्थसिद्धिदानङ्गवर्धिनी
अणिमादिगुणाधाराग्रगण्यालीकहारिणी ३
अचिन्त्यशक्तिरनघाद्भुतरूपाघहारिणी
अद्रिराजसुताष्टाङ्गयोगसिद्धिप्रदाच्युता ४
अक्षुण्णशक्तिरसुदानन्ततीर्थामृतोदका
अनन्तमहिमापारानन्तसौख्यप्रदान्नदा ५
अशेषदेवतामूर्तिरघोरामृतरूपिणी
अविद्याजालशमनी ह्यप्रतर्क्यगतिप्रदा ६
अशेषविघ्नसंहर्त्री त्वशेषगुणगुम्फिता
अज्ञानतिमिरज्योतिरनुग्रहपरायणा ७
अभिरामानवद्याङ्ग्यनन्तसाराकलङ्किनी
आरोग्यदानन्दवल्ली त्वापन्नार्तिविनाशिनी ८
आश्चर्यमूर्तिरायुष्या ह्याढ्याद्याप्रार्यसेविता
आप्यायिन्याप्तविद्याख्यात्वानन्दाश्वासदायिनी ९
आलस्यघ्न्यापदांहन्त्री ह्यानन्दामृतवर्षिणी

इरावतीष्टदात्रीष्टा त्विष्टापूर्तफलप्रदा १०
इतिहासश्रुतीड्यार्था त्विहामुत्रशुभप्रदा
इज्याशीलसमिज्येष्ठा त्विंद्रादिपरिवन्दिता ११
इलालङ्कारमालेद्धा त्विन्दिरारम्यमन्दिरा
इन्द्रेन्दिरादिसंसेव्या त्विश्वरीश्वरवल्लभा १२
ईतिभीतिहरेड्या च त्वीडनीयचरित्रभृत्
उत्कृष्टशक्तिरुत्कृष्टोडुपमण्डलचारिणी १३
उदिताम्बरमार्गोस्रोरगलोकविहारिणी
उक्षोर्वरोत्पलोत्कुम्भा उपेन्द्रचरणद्रवा १४
उदन्वत्पूर्तिहेतुश्चोदारोत्साहप्रवर्धिनी
उद्वेगघ्न्युष्णशमनी उष्णरश्मिसुताप्रिया १५
उत्पत्तिस्थितिसंहारकारिण्युपरिचारिणी
ऊर्जंवहन्त्यूर्जधरोर्जावती चोर्मिमालिनी १६
ऊर्ध्वरेतःप्रियोर्ध्वाध्वाद्यूर्मिलोर्ध्वगतिप्रदा
ऋषिवृन्दस्तुतर्द्धिश्च ऋणत्रयविनाशिनी १७
ऋतम्भरर्द्धिदात्री च ऋक्स्वरूपा ऋजुप्रिया
ऋक्षमार्गवहर्क्षार्चिर्ऋजुमार्गप्रदर्शिनी १८
एधिताऽखिलधर्मार्था त्वेकैकामृतदायिनी
एधनीयस्वभावैज्या त्वेजिताशेषपातका १९
ऐश्वर्यदैश्वर्यरूपा ह्यैतिह्यं ह्यैन्दवीद्युतिः
ओजस्विन्योषधीक्षेत्रमोजोदौदनदायिनी २०
ओष्ठामृतौन्नत्यदात्री त्वौषधम्भवरोगिणाम्
औदार्यचञ्चुरौपेन्द्री वौग्री ह्यौमेयरूपिणी २१
अम्बराध्ववहांबष्ठाम्बरमालाम्बुजेक्षणा
अम्बिकाम्बुमहायोनिरन्धोदान्धकहारिणी २२
अंशुमाला ह्यंशुमती त्वङ्गीकृतषडानना

अन्धतामिस्रहन्त्र्यन्धुरञ्जना ह्यञ्जनावती २३
कल्याणकारिणी काम्या कमलोत्पलगन्धिनी
कुमुद्वती कमलिनी कान्तिः कल्पितदायिनी २४
काञ्चनाक्षी कामधेनुः कीर्तिकृत्क्लेशनाशिनी
क्रतुश्रेष्ठा क्रतुफला कर्मबन्धविभेदिनी २५
कमलाक्षी क्लमहरा कृशानुतपनद्युतिः
करुणार्द्रा च कल्याणी कलिकल्मषनाशिनी २६
कामरूपा क्रियाशक्तिः कमलोत्पलमालिनी
कूटस्था करुणा कान्ता कुर्मयाना कलावती २७
कमला कल्पलतिका काली कलुषवैरिणी
कमनीयजला कम्रा कपर्दिसुकपर्दगा २८
कालकूटप्रशमनी कदम्बकुसुमप्रिया
कालन्दी केलिललिता कलकल्लोलमालिका २९
क्रान्तलोकत्रयाकण्डूः कण्डूतनयवत्सला
खड्गिनी खड्गधाराभा खगा खण्डेन्दुधारिणी ३०
खे खेलगामिनी स्वस्था खण्डेन्दुतिलकप्रिया
खेचरी खेचरीवन्द्या ख्यातिः ख्यातिप्रदायिनी ३१
खन्दितप्रणताघौघा खलबुद्धिविनाशिनी
खातैनः कन्दसन्दोहा खड्गखट्वाङ्गखेटिनी ३२
खरसन्तापशमनी खनिःपीयूषपाथसाम्
गङ्गा गन्धवती गौरी गन्धर्वनगरप्रिया ३३
गम्भीराङ्गी गुणमयी गतातङ्का गतिप्रिया
गणनाथाम्बिका गीता गद्यपद्यपरिष्टुता ३४
गान्धारी गर्भशमनी गतिभ्रष्टगतिप्रदा
गोमती गुह्यविद्या गौर्गोप्त्री गगनगामिनी ३५
गोत्रप्रवर्धिनी गुण्या गुणातीता गुणाग्रणीः

गुहाम्बिका गिरिसुता गोविन्दाङ्घ्रिसमुद्भवा ३६
गुणनीयचरित्रा च गायत्री गिरिशप्रिया
गूढरूपा गुणवती गुर्वी गौरववर्धिनी ३७
ग्रहपीडाहरा गुन्द्रा गरघ्नी गानवत्सला
घर्महन्त्री घृतवती घृततुष्टिप्रदायिनी ३८
घण्टारवप्रिया घोरा घौघविध्वंसकारिणी
घ्राणतुष्टिकरी घोषाघनानन्दा घनप्रिया ३९
घातुकाघूर्णितजला घृष्टपातकसन्ततिः
घटकृष्टिप्रपीतापा घटिताशेषमङ्गला ४०
घृणवती घृणनिधिर्घस्मरा घूकनादिनी
घुसृणापिञ्जरतनुर्घर्घरा घर्घरस्वना ४१
चन्द्रिका चन्द्रकान्ताम्बुश्चञ्चदापा चलद्युतिः
चिन्मयी चितिरूपा च चन्द्रायुतशतानना ४२
चाम्पेयलोचना चारुश्चार्वङ्गी चारुगामिनी
चार्या चारित्रनिलया चित्रकृच्चित्ररूपिनी ४३
चम्पूश्चन्दनशुच्यम्बुश्चर्चनीयाचिरस्थिरा
चारुचम्पकमालाढ्या चमिताशेषदुष्कृता ४४
चिदाकाशवहा चिन्त्या चञ्चच्चामरवीजिता
चोरिताशेषवृचिना चरिताशेषमण्डला ४५
छेदिताखिलपापौघा छद्मघ्नी छलहारिणी
छन्नत्रिविष्टपतला छोटिताशेषबन्धना ४६
छुरितामृतधारौघा छिन्नैनाश्छन्दगामिनी
छत्रीकृतमरालौघा छटीकृतनिजामृता ४७
जाह्नवी ज्या जगन्माता जप्या जङ्घालवीचिका
जया जनार्दनप्रीता जुषणीया जगद्धिता ४८
जीवनं जीवनप्राणा जगज्ज्येष्ठा जगन्मयी

जीवजीवातुलतिका जन्मिजन्मनिबर्हिणी ४९
जाड्यविध्वंसनकरी जगद्योनिर्जलाविला
जगदानन्दजननी जलजा जलजेक्षणा ५०
जनलोचनपीयूषा जटातटविहारिणी
जयन्ती जञ्जपूकघ्नी जनितज्ञानविग्रहा ५१
झिल्लरीवाद्यकुशला झलज्झालजलावृता
झिंटीशवन्द्या झङ्कारकारिनी झर्झरावती ५२
टीकिताशेषपाताला टङ्किकैनोद्रिपाटने
टङ्कारनृत्यत्कल्लोला टीकनीयमहातटा ५३
डम्बरप्रवहा डीनराजहंसकुलाकुला
डमड्डमरुहस्ता च डामरोक्तमहाण्डका ५४
ढौकिताशेषनिर्वाणा ढक्कानादचलज्जला
ढुंढिविघ्नेशजननी ढणड्डुणितपातका ५५
तर्पणी तीर्थतीर्था च त्रिपथा त्रिदशेश्वरी
त्रिलोकगोप्त्री तोयेशी त्रैलोक्यपरिवन्दिता ५६
तापत्रितयसंहर्त्री तेजोबलविवर्धिनी
त्रिलक्ष्या तारणी तारा तारापतिकरार्चिता ५७
त्रैलोक्यपावणीपुण्या तुष्टिदा तुष्टिरूपिनी
तृष्णाछेत्री तीर्थमाता त्रिविक्रमपदोद्भवा ५८
तपोमयी तपोरूपा तपःस्तोमफलप्रदा
त्रैलोक्यव्यापिनी तृप्तिस्तृप्तिकृत्तत्त्वरूपिणी ५९
त्रैलोक्यसुन्दरी तुर्या तुर्यातीतपदप्रदा
त्रैलोक्यलक्ष्मीस्त्रिपदी तथ्या तिमिरचन्द्रिका ६०
तेजोगर्भा तपःसारा त्रिपुरारिशिरोगृहा
त्रयीस्वरूपिणी तन्वी तपनाङ्गजभीतिनुत् ६१
तरिस्तरणिजामित्रं तर्पिताशेषपूर्वजा

तुलाविरहिता तीव्रपापतूलतनूनपात् ६२
दारिद्र्यदमनी दक्षा दुष्प्रेक्षा दिव्यमण्डना
दीक्षावती दुरावाप्या द्राक्षामधुरवारिभृत् ६३
दर्शितानेककुतुका दुष्टदुर्जयदुःखहृत्
दैन्यहृद्दुरितघ्नी च दानवारिपदाब्जजा ६४
दन्दशूकविषघ्नी च दारिताघौघसन्ततिः
द्रुता देवद्रुमच्छन्ना दुर्वाराघविघातिनी ६५
दमग्राह्या देवमाता देवलोकप्रदर्शिनी
देवदेवप्रिया देवी दिक्पालपददायिनी ६६
दीर्घायुःकारिणी दीर्घा दोग्ध्री दूषणवर्जिता
दुग्धाम्बुवाहिनी दोह्या दिव्या दिव्यगतिप्रदा ६७
द्युनदी दीनशरणं देहिदेहनिवारिणी
द्राघीयसी दाघहन्त्री दितपातकसन्ततिः ६८
दूरदेशान्तरचरी दुर्गमा देववल्लभा
दुर्वृत्तघ्नी दुर्विगाह्या दयाधारा दयावती ६९
दुरासदा दानशीला द्राविणी द्रुहिणस्तुता
दैत्यदानवसंशुद्धिकर्त्री दुर्बुद्धिहारिणी ७०
दानसारादयासारा द्यावाभूमिविगाहिनी
दृष्टा दृष्टफलप्राप्तिर्देवतावृन्दवन्दिता ७१
दीर्घव्रता दीर्घदृष्टिर्दीप्ततोया दुरालभा
दण्डयित्री दण्डनीतिर्दुष्टदण्डधरार्चिता ७२
दुरोदरघ्नी दावार्चिर्द्रवद्द्रव्यैकशेवधिः
दीनसन्तापशमनी दात्री दवथुवैरिणी ७३
दरीविदारणपरा दान्ता दान्तजनप्रिया
दारिता द्रितटा दुर्गा दुर्गारण्यप्रचारिणी ७४
धर्मद्रवा धर्मधुरा धेनुर्धीरा धृतिर्ध्रुवा

धेनुदानफलस्पर्शा धर्मकामार्थमोक्षदा ७५
धर्मोर्मिवाहिनी धुर्या धात्री धात्रीविभूषणम्
धर्मिणी धर्मशीला च धन्विकृष्टिकृतावना ७६
ध्यातृपापहरा ध्येया धावनी धूतकल्मषा
धर्मधारा धर्मसारा धनदा धनवर्धिनी ७७
धर्माधर्मगुणच्छेत्री धत्तूरकुसुमप्रिया
धर्मेशी धर्मशास्त्रज्ञा धनधान्यसमृद्धिकृत् ७८
धर्मलभ्या धर्मजला धर्मप्रसवधर्मिणी
ध्यानगम्यस्वरूपा च धरणी धातृपूजिता ७९
धूर्धूर्जटिजटासंस्था धन्या धीर्धारणावती
नन्दा निर्वाणजननी नन्दिनी नुन्नपातका ८०
निषिद्धविघ्ननिचया निजानन्दप्रकाशिनी
नभोङ्गणचरी नूतिर्नम्या नारायणी नुता ८१
निर्मला निर्मलाख्याना नाशिनीतापसंपदाम्
नियता नित्यसुखदा नानाश्चर्यमहानिधिः ८२
नदी नदसरोमाता नायिका नाकदीर्घिका
नष्टोद्धरणधीरा च नन्दना नन्ददायिनी ८३
निर्णिक्ताशेषभुवना निःसंगा निरुपद्रवा
निरालम्बा निष्प्रपञ्चा निर्णाशितमहामला ८४
निर्मलज्ञानजननी निःशेषप्रणितापहृत्
नित्योत्सवा नित्यतृप्ता नमस्कार्या निरञ्जना ८५
निष्ठावती निरातङ्का निर्लेपा निश्चलात्मिका
निरवद्या निरीहा च नीललोहितमूर्धगा ८६
नन्दिभृङ्गिगणस्तुत्या नागा नन्दा नगात्मजा
निष्प्रत्यूहा नाकनदी निरयार्णवदीर्घनौः ८७
पुण्यप्रदा पुण्यगर्भा पुण्यापुण्यतरङ्गिणी

पृथुः पृथुफला पूर्णा प्रणतार्तिप्रभञ्जिनी ८८
प्राणदा प्राणिजननी प्राणेशी प्राणरूपिणी
पद्मालया पराशक्तिः पुरजित्परमप्रिया ८९
परा परफलप्राप्तिः पावनी च पयस्विनी
परानन्दा प्रकृष्टार्था प्रतिष्ठा पालनी परा ९०
पुराणपठिताप्रीता प्रणवाक्षरूपिणी
पार्वती प्रेमसंपन्ना पशुपाशविमोचनी ९१
परमात्मस्वरूपा च परब्रह्मप्रकाशिनी
परमानन्दनिष्पन्दा प्रायश्चित्तस्वरूपिणी ९२
पानीयरूपनिर्वाणा परित्राणपरायणा
पापेन्धनदवज्वाला पापारिः पापनामनुत् ९३
परमैश्वर्यजननी प्रज्ञा प्राज्ञा परापरा
प्रत्यक्षलक्ष्मीः पद्माक्षी परव्योमामृतस्रवा ९४
प्रसन्नरूपा प्रणिधिः पूता प्रत्यक्षदेवता
पिनाकिपरमप्रीता परमेष्ठिकमण्डलुः ९५
पद्मनाभपदार्घ्येणप्रसूता पद्ममालिनी
परर्द्धिदा पुष्टिकरी पथ्या पूर्तिः प्रभावती ९६
पुनाना पीतगर्भघ्नी पापपर्वतनाशिनी
फलिनी फलहस्ता च फुल्लाम्बुजविलोचना ९७
फालितैनोमहाक्षेत्रा फणिलोकविभूषणम्
फेनच्छलप्रणुन्नैनाः फुल्लकैरवगन्धिनी ९८
फेनिलाच्छाम्बुधाराभा फडुच्चाटितपातका
फाणितस्वादुसलिला फाण्टपथ्यजलाविला ९९
विश्वमाता च विश्वेशी विश्वा विश्वेश्वरप्रिया
ब्रह्मण्याब्रह्मकृद्ब्राह्मी ब्रह्मिष्ठा विमलोदका १००
विभावरी च विरजा विक्रान्तानेकविष्टपा

विश्वमित्रं विष्णुपदी वैष्णवी वैष्णवप्रिया १०१
विरूपाक्षप्रियकरी विभूतिर्विश्वतोमुखी
विपाशा वैबुधी वेद्या वेदाक्षररसस्रवा १०२
विद्या वेगवती वन्द्या बृंहणी ब्रह्मवादिनी
वरदा विप्रकृष्टा च वरिष्ठा च विशोधनी १०३
विद्याधरी विशोका च वयोवृन्दनिषेविता
बहूदका बलवती व्योमस्था विबुधप्रिया १०४
वाणी वेदवती वित्ता ब्रह्मविद्यातरङ्गिणी
ब्रह्माण्डकृष्टिव्याप्ताम्बुर्ब्रह्महत्यापहारिणी १०५
ब्रह्मेशविष्णुरूपा च बुद्धिर्विभववर्धिनी
विलासिसुखदा वैश्या व्यापिनी च वृषारणिः १०६
वृषाङ्कमौलिनिलया विपन्नार्तिप्रभञ्जिनी
विनीता विनता ब्रध्नतनया विनयान्विता १०७
विपञ्ची वाद्यकुशला वेणुश्रुतिविचक्षणा
वर्चस्करी बलकरी बलोन्मूलितकल्मषा १०८
विपाप्मा विगतातङ्का विकल्पपरिवर्जिता
वृष्टिकर्त्री वृष्टिजला विधिर्विच्छिन्नबन्धना १०९
व्रतरूपा वित्तरूपा बहुविघ्नविनाशकृत्
वसुधारा वसुमती विचित्राङ्गी विभावसुः ११०
विजया विश्वबीजं च वामदेवी वरप्रदा
वृषाश्रिता विषघ्नी च विज्ञानोर्म्यंशुमालिनी १११
भव्या भोगवती भद्रा भवानी भूतभाविनी
भूतधात्री भयहरा भक्तदारिद्र्यघातिनी ११२
भुक्तिमुक्तिप्रदा भेशी भक्तस्वर्गापवर्गदा
भागीरथी भानुमती भाग्यं भोगवती भृतिः ११३
भवप्रिया भवद्वेष्ट्री भूतिदा भूतिभूषणा

भाललोचनभावज्ञा भूतभव्यभवत्प्रभुः ११४
भ्रान्तिज्ञानप्रशमनी भिन्नब्रह्माण्डमण्डपा
भूरिदा भक्तिसुलभा भाग्यवद्दृष्टिगोचरी ११५
भञ्जितोपप्लवकुला भक्ष्यभोज्यसुखप्रदा
भिक्षणीया भिक्षुमाता भावा भावस्वरूपिणी ११६
मन्दाकिनी महानन्दा माता मुक्तितरङ्गिणी
महोदया मधुमती महापुण्या मुदाकरी ११७
मुनिस्तुता मोहहन्त्री महातीर्था मधुस्त्रवा
माधवी मानिनी मान्या मनोरथपथातिगा ११८
मोक्षदा मतिदा मुख्या महाभाग्यजनाश्रिता
महावेगवती मेध्या महामहिमभूषणा ११९
महाप्रभावा महती मीनचञ्चललोचना
महाकारुण्यसंपूर्णा महर्द्धिश्च महोत्पला १२०
मूर्तिमन्मुक्तिरमणी मणिमाणिक्यभूषणा
मुक्ताकलापनेपथ्या मनोनयननन्दिनी १२१
महपातकराशिघ्नी महादेवार्धहारिणी
महोर्मिमालिनी मुक्ता महादेवी मनोन्मनी १२२
महापुण्योदयाप्राप्या मायातिमिरचन्द्रिका
महाविद्या महामाया महामेधा महौषधम् १२३
मालाधरी महोपाया महोरगविभूषणा
महामोहप्रशमनी महामङ्गलमङ्गलम् १२४
मार्तण्डमण्डलचरी महालक्ष्मीर्मनोज्झिता
यशस्विनी यशोदा च योग्या युक्तात्मसेविता १२५
योगसिद्धिप्रदा याज्या यज्ञेशपरिपूरिता
यज्ञेशी यज्ञफलदा यजनीया यशस्करी १२६
यमिसेव्या योगयोनिर्योनिनी युक्तबुद्धिदा

योगज्ञानप्रदा युक्ता यमाद्यष्टाङ्गयोगयुक् १२७
यन्त्रिताघौघसंचारा यमलोकनिवारिणी
याता यातप्रशमनी यातनानामकृन्तनी १२८
यामिनीशहिमाच्छोदा युगधर्मविवर्जिता
रेवती रतिकृद्रम्या रत्नगर्भा रमा रतिः १२९
रत्नाकरप्रेमपात्रं रसज्ञा रसरूपिणी
रत्नप्रासादगर्भा च रमणीयतरङ्गिणी १३०
रत्नार्ची रुद्ररमणी रागद्वेषविनाशिनी
रमा रामा रम्यरूपा रोगिजीवातुरूपिणी १३१
रुचिकृद्रोचनी रम्या रुचिरा रोगहारिणी
राजहंसा रत्नवती राजत्कल्लोलराजिका १३२
रामणीयकरेखा च रुजारी रोगरोषिणी
राकारं कार्तिशमनी रम्या रोलंबराविणी १३३
रागिणी रञ्जितशिवा रूपलावण्यशेवधिः
लोकप्रसूर्लोकवन्द्या लोलत्कल्लोलमालिनी १३४
लीलावती लोकभूमिर्लोकलोचनचन्द्रिका
लेखस्रवन्ती लटभा लघुवेगा लघुत्वहृत् १३५
लास्यत्तरङ्गहस्ता च ललिता लयभङ्गिगा
लोकबन्धुर्लोकधात्री लोकोत्तरगुणोर्जिता १३६
लोकत्रयहिता लोका लक्ष्मीर्लक्षणलक्षिता
लीला लक्षितनिर्वाणा लावण्यामृतवर्षिणी १३७
वैश्वानरी वासवेड्या वंध्यत्वपरिहारिणी
वासुदेवाङ्घ्रिरेणुघ्नी वज्रिवज्रनिवारिणी १३८
शुभावती शुभफला शान्तिः शान्तनुवल्लभा
शूलिनी शैशववयाः शीतलामृतवाहिनी १३९
शोभावती शीलवती शोषिता शेषकिल्बिषा

शरराया शिवदा शिष्टा शरजन्मप्रसूः शिवा १४०
शाक्तिः शशाङ्कविमला शमनस्वसृसम्मता
शमा शमनमार्गघ्नी शितिकराठमहाप्रिया १४१
शुचिः शुचिकरी शेषाशेषशायिपदोद्भवा
श्रीनिवासश्रुतिः श्रद्धा श्रीमती श्रीः शुभव्रता १४२
शुद्धविद्या शुभावर्ता श्रुतानन्दा श्रुतिस्तुतिः
शिवेतरघ्नी शबरी शाम्बरीरूपधारिणी १४३
श्मशानशोधनी शान्ता शश्वच्छतधृतिष्टुता
शालिनी शालिशोभाढ्या शिखिवाहनगर्भभृत् १४४
शंसनीयचरित्रा च शातिता शेषपातका
षड्गुणैश्वर्यसंपन्ना षडङ्गश्रुतिरूपिणी १४५
षराढताहारिसलिला ष्ट्यायन्नदनदीशता
सरिद्वरा च सुरसा सुप्रभा सुरदीर्घका १४६
स्वः सिन्धुः सर्वदुःखघ्नी सर्वव्याधिमहौषधम्
सेव्या सिद्धिः सती सूक्तिः स्कन्दसूश्च सरस्वती १४७
संपत्तरङ्गिणी स्तुत्या स्थाणुमौलिकृतालया
स्थैर्यदा सुभगा सौख्या स्त्रीषुसौभाग्यदायिनी १४८
स्वर्गनिःश्रेनिका सूक्ष्मा स्वधा स्वाहा सुधाजला
समुद्ररूपिणी स्वर्ग्या सर्वपातकवैरिणी १४९
स्मृताघहारिणी सीता संसाराब्धितरङ्गिका
सौभाग्यसुन्दरी संध्या सर्वसारसमन्विता १५०
हरप्रिया हृषीकेशी हंसरूपा हिरगमयी
हृताघसंघा हितकृद्धेला हेलाघगर्वहृत् १५१
क्षेमदा क्षालिताघौघा क्षुद्रविद्राविणी क्षमा १५२

Reference:
*Śhrī Gaṅgā Sahasranāma Stotram*, (Vārānasi: Chaukhambha Orientalia).